॥ श्रीः ॥

# श्रीरमणस्तोत्ररत्नावली

पद्मासनस्थितो देवः परमानन्दविग्रहः ।
भवाऽभावाय भवताद्भगवान् रमणो गुरुः ॥

श्रीरमणाश्रमः - अरुणाचलः

1944

॥ श्रीः ॥

# ॥ श्रीरमणस्तोत्ररत्नावली ॥

आत्मविद्याभूषणं - वे. जगदीश्वरशास्त्री

श्रीरमणाश्रमसर्वाधिकारिणा

निरञ्जनानन्दस्वामिना

प्रकाशिता ॥

[मूल्यम् ०-२-०]

## ॥ उपोद्घातः ॥

अस्यास्स्तोत्ररत्नावल्याः प्रणेता इञ्जिकोल्लग्रामाभिजनो वे. जगदीश्वरशास्त्री । अयं किल तर्कव्याकृतिवेदान्तालंकारादिशास्त्रज्ञोपि पण्डितसुलभदुस्स्वभावरहितो गुणवनाबाल्यादेवामुष्मिन्भगवति भक्तिं बबन्ध । अतो भगवदनुग्रहेण कृतार्थीकृतेषु भक्तेषु अयमप्यन्यतमो वर्तते । अमुमेवोपदेशेनानुगृहीतुं पुरा भगवतो मुखात् "हृदयकुहरमध्ये" इति निस्ससारस्वयमेवसरस्वती । विलोक्य चास्य वेदान्तादिवैदुष्यं तुष्टाः श्रीकाञ्चीकामकोटिपीठाधिपाः "आत्मविद्याभूषण" मिति बिरुदमस्मै प्रादुः ।

अत्र संकलितेषु स्तोत्रेषु भगवति भूयसी प्रेमभक्तिरनेन प्रणेत्रा सुदृढं प्रकाशिता । अध्यात्मतत्वप्रधानानीमानि स्तोत्राणि पारायणादिनाऽन्येषामपि भगवद्भक्तानां भूयसे श्रेयसे प्रेयसे च प्रभवेयुरिति विश्वसिमः । सर्वथा भगवत्परिपूर्णकृपाकटाक्षोऽस्माननिशमभिरक्षतात् । इति शिवं ।

निरञ्जनानन्दस्वामी.

## ॥ अनुक्रमणिका ॥

पृष्ठसंख्या

॥ श्रीमते रमणाय नमः ॥

# ॥ श्रीरमणप्रातस्स्मरणस्तोत्रम् ॥

---

प्रातस्स्मराम्यरुणशैलनितंबदीव्य-
त्पुण्याश्रमे रुचिरमञ्चवरे शयानम् ।
प्रावारकाऽऽवृततनुं मुकुलीकृताक्ष-
मन्तर्मुखं रमणमात्मसमाधिलीनम् ॥ १ ॥

प्रातर्नमाम्यरुणशैलविहारलोल-
मस्पर्शयोगसहजात्मसमाधिवश्यम् ।
आविर्भवन्निजसुखानुभवैकतृप्त-
मव्याजभूतकरुणं रमणं शरण्यम् ॥ २ ॥

प्रातर्भजाम्यपरिलुप्तनिगूढशक्ति
ज्ञानाग्निदग्धसहकारणजन्मबीजम् ।
लोकं समस्तमपि योजयितुं सुखेन
लीलागृहीतवपुषं रमणं मुनीन्द्रम् ॥ ३ ॥

प्रातस्स्तुवे स्तुतिपथातिगमप्रमेय-
मासेविनाममृतभावविधानदक्षम् ।
आसेचनं नयनयोरनवद्यशील-
मह्नोनिवारणचणं रमणं यतीन्द्रम् ॥ ४ ॥

प्रातर्ब्रुवे रमणपावननामधेयं
यद्भागधेयमखिलस्य तनोति जन्तोः ।
आम्रेडितं हरति यद्वृजिनं समस्तं
येन क्रमाद्भवतिसोऽहमिति प्रबोधः ॥ ५ ॥

यः श्लोकपञ्चकमिदं पठति प्रभाते
सौभाग्यदं भगवतो रमणेश्वरस्य ।
तस्मै समस्तजनकर्मफलप्रदाता
श्रेयस्स एव रमणस्सकलं ददाति ॥ ६ ॥

॥ श्रीरमणप्रातस्स्मरणस्तोत्रं समाप्तम् ॥

---

## ॥ प्रपत्त्यष्टकम् ॥

---

आवर्तपुर्यां जनितं प्रपद्ये पाण्ड्येशदेशे विहृतं प्रपद्ये ।
शोणाचलप्रस्थचरं प्रपद्ये भिक्षुं तपःक्लेशसहं प्रपद्ये ॥ १ ॥

आब्रह्मकीटान्तसमं प्रपद्ये जितारिषड्वर्गमहं प्रपद्ये ।
सर्वज्ञतासारभृतं प्रपद्ये निस्सीमकारुण्यनिधिं प्रपद्ये ॥ २ ॥

असात्प्रपञ्चादधिकं प्रपद्ये विश्वाधिकोक्तेर्विषयं प्रपद्ये ।
कालग्रहग्राहभयापनुत्यै कृतान्तशिक्षाकृतिनं प्रपद्ये ॥ ३ ॥

विनेतुमार्तिं विषयाध्वजन्यां विज्ञानमूर्तिं दधतं प्रपद्ये ।
कन्दर्पदर्पज्वरवारणाय कामारिलीलावतरं प्रपद्ये ॥ ४ ॥

आजन्मवर्णिव्रतिनं प्रपद्ये कुण्डीभृतं दण्डधरं प्रपद्ये ।
ब्रह्मासनध्यानरतं प्रपद्ये ब्रह्मात्मभूयं यतिनं प्रपद्ये ॥ ५ ॥

हरं प्रपद्ये विजरं प्रपद्ये स्वतन्त्रतायाः सदनं प्रपद्ये ।
अमेयसामर्थ्यवहं प्रपद्ये विशुद्धविज्ञानिवरं प्रपद्ये ॥ ६ ॥

दौर्भाग्य तापत्रय कर्म मोह सन्तापहन्तारमहं प्रपद्ये ।
यथार्थसंकल्पमपेतपापमवाप्तकामं विशुचं प्रपद्ये ॥ ७ ॥

मनः प्रसादं भजतां ददानं मुग्धस्मितोल्लासिमुखं प्रपद्ये ।
व्यथामशेषां व्यपनीय मोदप्रदेन नाम्ना रमणं प्रपद्ये ॥ ८ ॥

शिवं प्रपद्ये शिवदं प्रपद्ये गुरुं प्रपद्ये गुणिनं प्रपद्ये ।
मदीयहृत्पद्मजुषं प्रपद्ये शरण्यमीशं शरणं प्रपद्ये ॥ ९ ॥

प्रपत्तिं रमणस्यैतां तन्वतां तत्वदर्शिनः ।
तत्क्रतुन्यायरसिकाः तत्तादृशफलाप्तये ॥ १० ॥

॥ प्रपत्त्यष्टकं संपूर्णम् ॥

---

## ॥ अभयाष्टकम् ॥

---

भो ब्रह्मन् रमणेश ! तावकपदांभोजद्वये सांप्रतं
विज्ञाप्य रहसीदमेकमधुना श्रोतव्यमित्यर्थये ।
अज्ञातं भुवि नाणुमात्रमपि ते सर्वज्ञचूडामणे-
र्वक्तव्यं त्वननूदितं ननु नृणां मर्माणि निष्कृन्तति ॥ १ ॥

भीत्या त्वत्पदपंकजे श्रितवतां क्लेशप्रहाणैषिणा-
मत्रत्यैरुपचीयमानमनिशं प्रच्छन्नविद्वेषिभिः ।
दुर्वारप्रसरं भयं रमण ! नः क्षोभप्रदं चेतसः
स्वामिन्नाशयमूलतोऽथ वदवाऽभीतिप्रतिज्ञावचः ॥ २ ॥

संसाराह्वयनाटकस्य च भवान् सत्सूत्रधारायित-
स्स्वामिन् मृत्युभिया मृकण्डुसुतवद्भर्गाकृतिं तावकीम् ।
मूर्तिं भव्यधियो वयं शरणमित्याश्रित्य सेवामहे
किं वास्मास्वपि ते विहीनकरुणं युक्तं भयोत्पादनम् ॥ ३ ॥

वेदान्ते क्वचिदाश्रुतं भगवतो भीतिप्रदत्वन्तु य-
त्तन्मायापरिकल्पितार्थविषयं तत्वार्थतां नाश्नुते ।
नोचेद्धन्त ! विजानतां तव कृपालेशाद्विमुक्तात्मनां
नूनं नैव घटेत भीतिरहितावस्थत्वमव्याहतम् ॥ ४ ॥

मायाकल्पितनामरूपकलना यावन्नृणां वर्तते
तावत्तान्समुपैति भीतिरिति हि प्रोवाच वाग्वैदिकी ।
अद्वैते परिनिष्ठितस्य महसि स्वे ते गतान्द्वकपथं
द्वैताद्भः कथमेतु भीतिरथवा ताः किन्निरर्था गिरः ॥ ५ ॥

कल्याणानि तनोतु कोऽपि गुरुराट् कैवल्यदानव्रती
व्यापन्नाभयसत्रदीक्षित इति ख्यातः कृपालुः क्षमी ।
सर्वानर्थनिदानमोहकलिलोद्भूतं भयं मानसं
किञ्च श्रीरमणः प्रमार्ष्टु भगवानित्येव नः प्रार्थना ॥ ६ ॥

रमणभगवत्पादंभोजे सदा रमतां मनो
रमणभगवद्वक्त्रांभोजे मनः पिवतान्मधु ।
रमणभगवन्मूर्तिं दिव्यां मुहुस्स्मरतान्मनो
रमणभगवत्पादाचार्यो ममास्तु परायणम् ॥ ७ ॥

शोणाद्रीश्वरसञ्चराय यमिने मायागृहीतात्मने
स्वात्मस्थाय कृपारसार्द्रमनसे शान्ताय सन्यासिने ।

मग्नानां भवसागरे भुवि नृणामानन्दमुत्सर्जते
तस्मै श्रीरमणाय बोधगुरवे तन्म स्त्रिसन्ध्यं नमः ॥ ८ ॥

ध्यायेत् पद्मासनस्थं प्रमुदितवदनं दक्षिणामूर्तिरूपं
कौपीनालङ्कृताङ्गं हृदि किमपि महस्सन्ततं चिन्तयन्तम् ।
भासा स्वेनैव भान्तं गुरुकरुणदृशं साधुसंसेविताङ्घ्रिं
सर्वश्रेयोवदान्यं रमणमुनिवरं शोणशैलेशरूपम् ॥ ९ ॥

कुर्वीष्ट भगवानिष्टं पठतामभयाष्टकम् ।
विष्टभ्य भुवनं कृत्स्नं य ईष्टे रमणो गुरुः ॥ १० ॥

॥ अभयाष्टकं संपूर्णम् ॥

---

## ॥ दयाष्टकम् ॥

---

मातस्त्वां रमणेशसद्गुरुकृपे! नाथामि नत्वा मुहुः
क्रुद्धे शान्तिनिकेतनेऽपि रमणे मत्सञ्चितैर्दुष्कृतैः ।
तत्काले भवती तदीयहृदये सान्निध्यमाबिभ्रती
यद्यस्मत्प्रियमातनोषि तदलं तस्य प्रिया त्वं यतः ॥ १ ॥

देवि ! त्वं करुणे ! श्रितासि रमणं सोऽपि त्वदावर्जितः
त्वां हित्वा प्रियवल्लभां स च नृणां भद्रं न कर्तुं क्षमः ।
त्वं चेत्तस्य विभो र्भवत्कृतपरिष्वंगैरपांगैरमुं
मामालोकयसे क्षतिस्तव तु का किंस्याच्च मे दुर्दशा ॥ २ ॥

नाम्नासौ रमणस्समस्तजगतां जागर्ति ते गृह्यकः
क्कार्तिप्रविधूननैकचतुरा मूर्तिस्तवान्यादृशी ।

तस्मान्मामकमानसार्तिहरणं कुर्या न चेत्त्वं कृपे!
नश्येद्धन्त तवाकृतिर्विद कथं स्यादात्मलाभस्तव ॥ ३ ॥

त्यक्त्वाऽन्यानखिलान् सुरान् सुरपतिं त्वद्वल्लभं सेवितुं
शान्तं श्रान्तिहरं तदाश्रमपदं मय्युद्यते गाहितुम्।
मातः! श्रीरमणैकवासिनि! दये! विघ्नाः प्ररूढा मुहुः
भिन्दंस्तान्पततात् कदा मयि जडे ते श्रान्तिहारी झरः ॥ ४ ॥

किं वा ते रचितं दये! न रुचितं किञ्चिन्मयोपायनं
प्रागेव प्रबलापराधकबलस्त्वत्पादयोरर्पितः।
सत्येवं हृदयज्वरं मम कथं हर्तुं विलंबोऽब! ते
बालस्यार्तिहृतौ समस्ति भुवने को वा विना मातरम् ॥ ५ ॥

एतस्यां दुरवस्थितौ विमुखता यद्यस्ति मत्पालने
मग्नोऽहं विपदंबुधौ विगलितः क्लिश्नामि नश्यामि च।
मग्ना स्या अयशोंबुधौ त्वमपि, मे यत्किञ्चिदास्तामिदं
स्वोद्धारे तु दये! स्वयं प्रयतनं कर्तव्यमेव त्वया ॥ ६ ॥

सार्वज्ञ्यादिगुणास्सहस्रगुणिता ये सन्ति दिव्याद्भुताः
ते सर्वे रमणं श्रिता अपि सदा व्यर्था भवत्या विना।
स्वीयाख्यां रमणस्य निर्वहयितुं ते न क्षमास्त्वामृते
तस्मान्मामक मन्तुजालमखिलं क्षन्तुं दये! ऽभ्यर्थये ॥ ७ ॥

पापौघं दलयस्ययं! कबलयस्यार्तींश्च कीर्तिं तनो-
ष्यानन्दं परमं च कन्दलयसि श्रेयांसि भूयांसि नः।
ब्रह्माद्यानपि किङ्करान् वितनुषे मुक्तिं विदत्सेतरां
अंब! श्रीरमणस्वरूपिणि कृपे! बद्धः प्राणामाञ्जलिः ॥ ८ ॥

कलिना बलिना कदर्थितानां स्वहितज्ञानविलुप्तमानसानाम् ।
इदमस्तु परायणं नराणां रमणेशीयदयाष्टकं धरण्याम् ॥ ९ ॥

॥ दयाष्टकं संपूर्णम् ॥

---

## ॥ मातृभूतेश्वराष्टकम् ॥

---

माता त्वं च पितासि सर्वजगतां माता पिता वा न ते
तस्मात्त्वं भुवि विश्रुतोऽसि भगवंस्त्वं मातृभूतेश्वरः ।
तेन त्वं महिलार्धविग्रह इति ख्यातश्च नाम्नैव ते
तत्वार्थाकलनाय केवलमसौ जागर्ति योगेश्वरी ॥ १ ॥

सिद्धक्षेत्रमिदं जगत्सुविदितं देवोऽरुणाद्रीश्वरः
सिद्धश्रीरमणीयहस्तविभवाच्छ्रीमातृभूतेश्वरः ।
सिद्धोऽसौ भुवि सिद्धिदस्सह महायोगेश्वरीजायया
पर्याप्तन्त्विद मेतदीयमहिमप्रख्यापने भूजुषाम् ॥ २ ॥

भीमैर्भोगिवरैर्विभूषिततनुर्यद्यप्यभीतिप्रदः
पूतः प्रेतनिकेतगोऽपि फलदो भिक्षाकएवस्वयम् ।
साकं श्रीरमणेश्वरेण भजतां ध्यानास्पदं योगिनां
सोऽयं चित्रचरित्रको विजयते श्रीमातृभूतेश्वरः ॥ ३ ॥

भीतो भीमभुजगमैर्न च तथा प्रीतो हिमांशोः करा-
त्पूतो जह्नुसुताजलान्नच न चापूतोऽस्थिसंभूषणात् ।
नो दुःखी चितिभस्मनः पितृवनावासाच्च योगांबिका-
संगान्नापि सुखी समो विषमदृक् श्रीमातृभूतोऽवतु ॥ ४ ॥

दिग्रूपं वसनं विहाय रुचिरं क्षौमं वसानश्शुभं
हित्वा वासरुचिं श्मशानगहने पुण्याश्रमैकाश्रयः ।
चित्यं भस्म विहाय चन्दनरसैर्माल्यैः कृतालंक्रियः
योगांबागृहमेधिको विजयते श्रीमातृभूतेश्वरः ॥ ५ ॥

यच्छक्त्या रमणाश्रमस्थलमिदं भूवासिनां नन्दनं
जातं स्वस्य विचित्रशिल्परचनावैचित्र्यचैत्यं महत् ।
शोणाद्रीश्वरसानुगस्स जगतामीशो निरीशस्स्वयं
सर्वैश्वर्यनिधिर्धुनोतु दुरितं श्रीमातृभूतेश्वरः ॥ ६ ॥

गंगाचन्द्रकलाधरोऽसि शिरसि श्रीमातृभूतेश ! ते
वामार्धे करुणारसार्द्रहृदया योगेश्वरी राजते ।
शीतांगाश्च भुजंगमाः करपदोः क्लिश्नाभिषेकोऽनिशं
सह्यं शल्यमिदं कथं यदि वसेश्चित्ते न तत्ते मम ॥ ७ ॥

माताऽभूद्रमणस्य या भगवतस्सौन्दर्यनाम्नी सती
पश्चात् सैव समस्तलोकजननीत्वेनापि संपूजिता ।
अद्यत्वे तु विहाय सा परिणता स्त्रीत्वं पुमाकारतो
लिंगातिक्रमरूपतश्च लसति श्रीमातृभूतेश्वरः ॥ ८ ॥

भगवद्रमणाचार्य मातृभूतेश्वरस्तुतिः ।
अर्पिता तत्पदद्वन्द्वे जगदीश्वरशास्त्रिणा ॥ ९ ॥

॥ मातृभूतेश्वराष्टकं संपूर्णम् ॥

# ॥ तारावलिस्तुतिः ॥

अज्ञानान्धतमो विमोहितधियां दुर्वादकोलाहलै-
र्लीने सकले सनातनपथे कालेयलीलायितैः ।
क्षेमाय क्षितिमण्डले करुणया कृत्वाऽऽकृतिं प्राकृतीं
निर्धूताखिलदुर्मतो विजयते श्रीशङ्करश्शङ्करः ॥ १ ॥

पुण्यैर्भूतलसंभ्रमैरुपनिषद्भाष्यादिवाग्गुंभनैः
शिष्यैश्चाप्यफलीकृते स्वरचितत्रैलोक्यरक्षाक्रमे ।
जीयाच्छङ्करसद्गुरोः प्रियकृते जातावतारः पुनः
सोऽयं श्रीरमणो गुरुर्गुणगणैरध्यात्मनिष्ठो मुनिः ॥ २ ॥

रमणेशपदांभोज रजःकणमुपास्महे ।
यद्वासनापरिष्वंगाद्विगलन्ति कुवासनाः ॥ ३ ॥

आह्लादाऽऽवहमञ्जनं नयनयोरङ्गे सुधालेपनं
धैर्यं चेतसि खेदनामकगदप्रोत्सारकं भेषजम् ।
मध्याह्नार्क इव प्रसूतिजलधौ लोकप्रकाशोदयं
पुण्यैः श्रीरमणेश्वरं परणतैर्धन्या लभन्ते नराः ॥ ४ ॥

शोणाद्रीशकुटीविहारसरसे दग्धांगजातैधसे
कारुण्यादिगुणैकधाममनसेऽन्वर्थीकृतच्छन्दसे ।
सर्वापद्दुरितान्धसे भवभयप्रोद्धारकात्यौजसे
भक्तश्रेणिशिखादृतांघ्रिरजसे सेयन्नतिस्तेजसे ॥ ५ ॥

मोहातीतस्त्वमसि भगवन्! मुग्धमूर्तिं दधानो
वेलालंघिव्यवहृतिरतो बद्धवन्नानटीषि ।
भक्तत्राणं भवजलनिधेरात्मनैव प्रणेतुं
पर्यङ्केऽस्मिन् वससि यदियं भाति ते कापि लीला ॥ ६ ॥

दूरीकर्तुं प्रभवति तवोपासनैव प्रजाना-
मेनोराशीनिति गुरुमणे! त्वत्समीपाश्रितानाम् ।
त्वद्भक्तानामपि बहुविधाभीष्टकामार्दितानां
भीतिं किंवा सृजसि भगवन्! व्यर्थचिन्तानिदानम् ॥ ७ ॥

नानाशाखाविवृतमहिमा नाशिताशेषमोहः
मौनालंबी प्रमुषितजटस्साधुसंघैरुपेतः ।
मञ्चस्थोऽयं रमणभगवान्दक्षिणामूर्तिं रास्ते
प्रत्यासत्तेररुणमहसः प्राप्य सारूप्यलक्ष्मीम् ॥ ८ ॥

शान्तेरेकं सदनममृतासारशीतं प्रकृत्या
सौम्यं रूपं रमणभगवन्! दर्शनीयं त्वदीयम् ।
वैराग्या त्ते तृणवदखिलत्यागकाले कराले
द्रष्टुं दृष्ट्या क इव चतुरस्त्वां त्वमेव क्षमोऽसि ॥ ९ ॥

साक्षात्कृत्याऽरुणधरणिभृद्वासिनं सद्गुरुं त्वां
द्रक्ष्यन्त्यन्यत्किमिव यमिनस्तावकीनोपदेशैः ।
ऐदंपर्यं निगमशिरसां यत्र सच्चित्स्वरूपे
ब्रह्मैव त्वं तदसि भगवन्नित्यमुक्तस्वरूपम् ॥ १० ॥

दारान् बन्धूनपि च तनयान् क्षेत्रवित्तानि गेहं
सन्तस्त्यक्त्वा सकलमपि ते पादपद्मं भजन्ते ।

किन्त्वेतांस्त्वं कपटवचनैर्भीषयन्नाथ ! नैवं
तत्वं ब्रूया न खलु भवतो वञ्चनां ते लभन्ताम् ॥ ११ ॥

शब्दाद्याख्यै र्विषयनिचयै र्व्यञ्चितं दृष्टनष्टं
सौख्यं दुःखोत्तरमपि मया बुद्ध्यते मोक्षतुल्यम् ।
भोगा एते रमण ! विरसा यस्य ते लेशलेशाः
सान्द्रानन्दस्फुरितजलधिं त्वां तमेवाश्रयामः ॥ १२ ॥

नाहं याचे रमणभगवन् ! लौकिकं भोगजातं
नापि स्वर्गं सुरपरिबृढाधिष्ठितं ब्रह्मलोकम् ।
याचेऽहं त्वां चरणपतितस्त्वत्पदाब्जैकसेवाऽऽ-
धीनामात्मप्रवणनिपुणां दृष्टिमान्तर्मुखीं ताम् ॥ १३ ॥

उर्व्यां स्वैरं कतिचन जना देवतानां नृपाणा-
मिभ्यानां वा स्तवनरचनैः कालजालं क्षिपन्तु ।
त्वत्पादाब्जाऽऽकलनजनितानन्दनिष्यन्दसिन्धो-
रन्तश्चारैर्वयमिह सदा कालमेते नयामः ॥ १४ ॥

गन्तव्या सा प्रभुनिवसती रञ्जनीयास्तदीया
भृत्या स्सेव्यः प्रभुरपि धनैस्सद्म मे पूरणीयम् ।
इत्थं चिन्तां चिरपरिचितां नाथ ! सन्त्यज्य सोऽहं
त्वन्निध्यानात् सफलजननस्स्यां कदा वा वद त्वम् ॥ १५ ॥

आढ्या दद्यु र्वसु वसुमतीं हाटकं वा पटं वे-
त्येवं भ्रान्त्या धनिकसदनं त्वामुपेक्ष्याऽऽश्रयामः ।
लब्धं किन्नो रमण ! भवतोपेक्षया जायमानै-
रेनःकूटैः खलु कृपणता केवलं वर्द्धते नः ॥ १६ ॥

संविद्धीनस्सुरतरुगणः कामधेनुः पशुस्सा
ग्रावा चिन्तामणिरपि कवौ पक्षपाती च भोजः ।
कर्णो दुष्टाश्रयणकलुषः कालकांक्षी पयोद-
स्त्वौदार्ये ते रमण ! तुलनां याति नान्यो वदान्यः ॥ १७ ॥

गेहो नाकः प्रणमति खलः पातकं पुण्यति द्रा-
ग्द्वेषी मित्रं विषयजसुखं मोक्षति क्ष्माधिपश्च ।
दासो मृत्युर्भिषजति महादूषणं भूषणं स्या-
द्यत्पादाब्जप्रपतनवशात्तं नमामो भवन्तम् ॥ १८ ॥

सर्वज्ञस्त्वं जडमतिरहं त्वं प्रभुस्त्वेष दीनः
दुःखागारः प्रतिपदमहं सौख्यपाथोनिधिस्त्वम् ।
सर्वं कर्तुं प्रभवति भवानल्पशक्तिः किलाऽहं
भिन्नावस्था क्रिमिति जनिता मय्यभिन्ने त्वयैव ॥ १९ ॥

समीहासन्तानै हृदयमिदमाकृष्ट मदयं
ततोऽन्यद्दैन्यं मे किमिव विपदस्सन्ति शतशः ।
अनाख्येया अन्या अलमलमये ! घूर्णनमिदं
भवोर्मिष्वेतासु प्रवितर गुरो ! चेतसि शमम् ॥ २० ॥

त्वन्मूर्तौ मे रमणभगवन् ! मज्जतान्नेत्रयुग्मं
त्वद्ध्यानाध्वन्यपि परवशं स्वान्तमभ्येतु शान्तम् ।
त्वत्पूजार्थं वपुरपि सदा त्वत्स्तुतौ वाक्च भूयात्
इत्थं नोचेदहह ! भुवने स्वैरचारी हतस्स्याम् ॥ २१ ॥

वेदान्तास्ते कति कति लसन्त्येषु शाखास्त्वनन्ताः
तासामर्थप्रवचनपरं शास्त्रजालं त्वनन्तम् ।

तेषां वर्णग्रहण अपि वा नालमेकं पुमायुः
त्राता नस्त्वं यदि न गुरुराट् किं भवाब्धिं तरेम ॥ २२ ॥

नामं नामं रमणचरणद्वन्द्व मद्वन्द्वहेतुं
श्रावं श्रावं हृदयहितदा स्सूक्तिधारास्तदीयाः ।
ध्यायं ध्यायं रमण भगवन् मूर्तिमव्याजभक्त्या
बोधं बोधं भवजलनिधिं दुस्तरं सन्तरामः ॥ २३ ॥

प्रसीद रमणप्रभो ! मम हृदि प्रभूतं भयं
निवारय दरिद्रतां दलय देहि बोधं स्वकम् ।
विधेहि करुणानिधे ! शिरसि मे तवांघ्रिद्वयं
विदारय जरामृतिं वितर वाञ्छितं श्रीगुरो ! ॥ २४ ॥

दीर्घायुष्यं कथमिव जयन्तोद्दिने प्रार्थयामः
कर्मायत्तं भुवि जनिमता मायुराहुर्महान्तः ।
तान् मोहोत्थान् वशयति भवान् कालकर्मादिभावां-
स्तत्वज्ञानाद्दलिततमसः कालचिन्ता कथं ते ॥ २५ ॥

भान्वब्देऽस्मिन् सुपदयुजि ते जन्मवारे शुभंयौ
आढ्या भक्ता विलसितकरास्सूपहारैर्महार्घैः ।
सेवन्ते त्वां रमण ! कृतिनः पूज्यपादं कृतज्ञाः
क्षुद्रस्तोत्रं त्वदुपहृतये कल्पयंस्तात ! लज्जे ॥ २६ ॥

जय जय रमणेश ! दीनबन्धो !
जय जय जनतार्तिनाशहेतो ! ।
जय जय भगवन् ! प्रबोधमूर्ते !
जय जय दहनाचलैककलोल ! ॥ २७ ॥

जय जय करुणामयपुण्यमूर्ते !
जय जय विश्रुतलोकगीतकीर्ते ! ।
जय जय भक्तजनार्पितैकभुक्ते !
जय जय सुन्दरदंपतीप्रसूते ! ॥ २८ ॥

तारावलिस्तुतिमिमां रमणेश्वरीयां
श्रुण्वन्ति ये भुवि पठन्ति च भक्तिभाजः ।
वित्तादि वैषयिकसुखेषु विरक्तिरेषां
संसक्तिरात्मनि भवेद्रमणप्रसादात् ॥ २९ ॥

---

॥ तारावलीस्तोत्रं समाप्तम् ॥

Liberty Press, Madras

# ॥ श्रीरमणाश्रमपुस्तकालयम् ॥

॥ संस्कृतानि ॥

| | | | | |
|---|---|---|---|---|
| श्रीरमणगीता | .... | ० | ४ | ० |
| सद्दर्शनम् सभाष्यम्-श्रीरमणमहर्षिकृत द्राविडभाषा-ग्रन्थस्य गणपतिमुनिकृतानुवादः सभाष्यः | .... | ० | १२ | ० |
| उपदेशसारः-श्रीरमणमहर्षिभिः प्रणीतः | .... | ० | ० | ६ |
| श्रीरमणाष्टोत्तरशतनामस्तोत्रम् | .... | ० | ० | ६ |
| श्रीरमणचत्वारिंशत्-गणपतिमुनिकृतं स्तोत्रम् | .... | ० | १ | ० |
| गीतमाला-गणपतिमुनिविरचिता | .... | ० | ४ | ० |
| श्री अरुणाचलपञ्चरत्नदर्पणम् | .... | ० | २ | ० |
| श्रीरमण-मानसिकपूजा<br>श्री गुरुविज्ञप्तिः } वे. जगदीश्वरशास्त्री | .... | ० | २ | ० |

॥ हिन्दी ॥

| | | | | |
|---|---|---|---|---|
| श्रीरमणचरितामृत | .... | १ | १२ | ० |
| श्रीमहर्षि-११२ चित्रों के सहित | .... | ० | ८ | ० |
| मैं कौन हूँ | .... | ० | २ | ० |

॥ मराठी ॥

| | | | | |
|---|---|---|---|---|
| श्रीरमणप्रस्थानत्रयी | .... | १ | ४ | ० |

मिलने का पता—श्री निरञ्जनानन्दस्वामी,
सर्वाधिकारी,
श्रीरमणाश्रमम्, तिरुवण्णामलै.
[दक्षिण भारत]